# कामकलाकाली भुजङ्ग स्तोत्रम्

श्री गणेशाय नमः ।

महाकाल उवाच –

अथ वक्ष्ये महेशानि देव्याः स्तोत्रं अनुत्तमम् ।
यस्य स्मरण मात्रेण विघ्ना यान्ति पराङ्मुखा
॥ 1 ॥

विजेतुं प्रतस्थे यदा कालकस्या
सुरान् रावणो मुञ्जमालि प्रवर्हान् ।
तदा कामकालीं स तुष्टाव
वाग्भिः जिगीषुर्मृधे बाहुवीर्येण सर्वान् ॥ 2 ॥

महावर्तभीमा सृगब्ध्युत्थवीची
परिक्षालिता श्रान्तकन्थ श्मशाने ।
चिति प्रज्वलद् वह्निकीलाजटाले
शिवाकार शावासने सन्निषण्णाम् ॥ 3 ॥

महाभैरवी योगिनी डाकिनीभिः
कराळाभिरापाद लम्बत्कचाभिः ।
भ्रमन्तीभिरापीय मद्यामिषास्रान्यजस्रं
समं सञ्चरन्तीं हसन्तीम् ॥ 4 ॥

महाकल्पकालान्त कादम्बिनी
त्विट्परिस्पर्द्धि देहद्युतिं घोरनादाम् ।
स्फुरद् द्वादश आदित्य कालाग्नि रुद्र
ज्वलद्विद्युदोघ प्रभा दुर्निरीक्ष्याम् ॥ 5 ॥

लसन्नील पाषाण निर्माण वेदि
प्रभ श्रोणि बिंबां चलत्पीवरोरुम् ।
समुत्तुङ्ग पीनायतो रोजकुंभां
कटिग्रन्थित द्वीपिकृत्युत्तरीयाम् ॥ 6 ॥

स्रवद्रक्तवल्गा न्नृमुण्डावनद्धा
सृगाबद्ध नक्षत्रमालैकहाराम् ।
मृतब्रह्मकुल्योप क्लृप्ताङ्गभूषां
महाट्टाट्टहासैः जगत त्रासयन्तीम् ॥ 7 ॥

निपीताननान्त अमितोद्धृत्तरक्तो
च्छलद्धारया स्नापितोरोजयुग्माम् ।
महादीर्घ दंष्ट्रायुगन्यञ्चदञ्च
ल्ललल्लेलिहानोग्र जिह्वाग्रभागाम् ॥ 8 ॥

चलत् पादपद्मद्वया लम्बिमुक्त –
प्रकंपालि सुस्निग्ध संभुग्नकेशाम् ।
पदन्यास संभारभीताहिराजा –
ननोद्गच्छदात्म स्तुतिव्यस्तकर्णाम् ॥ 9 ॥

महाभीषणां घोरविंशार्द्धवक्त्रैः
तथासप्तविंशान्वितैः लोचनैश्च ।
पुरोदक्षवामे द्विनेत्रोज्ज्वलाभ्यां
तथा अन्यानने त्रिनेत्राभिरामान् ॥ 10 ॥

लसद्वीपिहर्य्यक्ष फेरुप्लवङ्ग –
क्रमेलर्क्षतार्क्षद्विप ग्राहवाहैः ।
मुखैरीदृशाकारितैः भ्राजमानां
महापिङ्गलोद्य जटाजूटभाराम् ॥ 11 ॥

भुजैः सप्तविंशाङ्कितैः वामभागे
युतां दक्षिणे चापि तावद्भिरेव ।
क्रमाद्रत्नमालां कपालं च शुष्कं
ततश्चर्मपाशं सुदीर्घं दधानाम् ॥ 12 ॥

ततः शक्ति खट्वाङ्गमुण्डं भुशुण्डीं
धनुश्चक्र घण्टा शिशुप्रेत शैलान् ।
ततो नारकङ्काल बभ्रूरगोन्माद –
वंशीं तथा मुद्गरं वह्निकुण्डम् ॥ 13 ॥

अधो डम्मरुं पारिघं भिन्दिपालं
तथा मौशलं पट्टिशं प्राशमेवम् ।
शतघ्नीं शिवापोतकं चाथ दक्षे
महारत्नमालां तथा कर्त्तुखड्गौ ॥ 14 ॥

चलत् तर्जनीं अङ्कुशं दण्डं उग्रं
लसद् रत्न कुंभं त्रिशूलं तथैव ।
शरान् पाशुपत्यां तथा पञ्च कुन्तं
पुनः पारिजातं छुरीं तोमरं च ॥ 15 ॥

प्रसूनस्रजं डिण्डिमं गृध्रराजं
ततः कोरकं मांसखण्डं श्रुवं च ।
फलं बीजपूराह्वयं चैव सूचीं
तथा पर्शुमेवं गदां यष्टिं उग्राम् ॥ 16 ॥

ततो वज्रमुष्टिं कुणप्पं सुघोरं
तथा लालनं धारयन्तीं भुजैस्तैः ।
जवापुष्परोचिः फणीन्द्रोपक्लृप्त –
क्वणन्नूपुर द्वन्द्वसक्ताङ्घ्रिपद्माम् ॥ 17 ॥
महापीतकुंभी नसावद्धनद्ध
स्फुरत् सर्वहस्तोज्ज्वलत् कङ्कणां च ।
महापाटल द्योतिदर्वीकरेन्द्रा –
वसक्ताङ्गद व्यूह संशोभमानाम् ॥ 18 ॥

महाधूसरत्त्विड् भुजङ्गेन्द्रक्लृप्त –
स्फुरत् चारुकाटेय सूत्राभिरामाम् ।
चलत् पाण्डुराहीन्द्र यज्ञोपवीत –
त्विडुद्भासि वक्षःस्थलोद्यत्कपाटाम् ॥ 19 ॥

पिषङ्गोरगेन्द्रावनद्धावशोभा –
महामोहबीजाङ्ग संशोभिदेहाम् ।
महाचित्रिताशी विषेन्द्रोपक्लृप्त –
स्पुरत् चारु ताटङ्क विद्योतिकर्णाम् ॥ 20 ॥

वलक्षाहि राजावनद्धोर्ध्वभासि –
स्फुरत् पिङ्गलोद्यज्जटाजूटभाराम् ।
महाशोण भोगीन्द्र निस्यूतमूण्डो
लसत्किङ्किणीजाल संशोभिमध्याम् ॥ 21 ॥

सदा संस्मरामीदृशों कामकालीं
जयेयं सुराणां हिरण्योद्भवानाम् ।
स्मरेयुर्हि येऽन्येऽपि त वै जयेयुः
विपक्षान्मृधे नात्र सन्देहलेशः ॥ 22 ॥

पठिष्यन्ति ते मत्कृतं स्तोत्रराजं
मुदा पूजयित्वा सदा कामकालीम् ।
न शोको न पापं न वा दुःखदैन्यं
न मृत्युर्न रोगो न भीतिर्न चापत् ॥ 23 ॥

धनं दीर्घमायुः सुखं बुद्धिरोजो
यशः शर्मभोगाः स्त्रियः सूनवश्च ।
श्रियो मङ्गळं बुद्धिरुत्साह आज्ञा
लयः शर्म सर्व विद्या भवेन् मुक्तिरन्ते ॥ 24 ॥

॥ इति श्री महावामकेश्वर तन्त्रे कालकेय हिरण्यपुरविजये रावणकृतं कामकलाकाली भुजङ्गप्रयात स्तोत्रराजं संपूर्णम् ॥